# षोडशश्लोकी शिक्षा

अथ शिक्षाँ प्रवक्ष्यामि वाच उच्चारणे विधिम्
यथा संव्यवहारेषु स्वयं प्रोक्ता स्वयम्भुवा १

त्रयस्त्रिंशद्धशा वर्णाः स्वरा द्वाविंशतिर्य्यमाः
चत्वारश्च विसर्गोऽनुस्वारः कः पस्त्रिषष्टिकाः २

समास्तेऽदिदुतो ज्ञेया ऋृच्चादीर्घ लृपञ्चमः
एदैदोदौ तु चत्वारोऽह्रस्वाः सन्ध्यक्षराणि च ३

ह्रस्वदीर्घप्लुता भेदास्तदुदात्तोऽनुदात्तकाः
स्वरितश्चापि ते सानुनासिकाननुनासिकाः ४

इत्यष्टादशधा भेदा व्यवर्णा नामिनः स्वराः
कुचुटुतुपुवर्गास्तदुत्पञ्चवर्णसङ्ग्रहःइति स्वरभेदाः ५

कुप्वन्त्यच्वादिवर्गाणां व्युत्क्रमात्पञ्चमादितः
खफाद्याश्छठथा ज्ञेया रलान्त्या हयवाः स्मृताः ६

अतश्चेतः स्वराः पूर्व्वा हलो ञमो झमो जबः
खथश्चपः शसश्चैते प्रत्याहारास्त्वसङ्ख्यकाः ७

कादयो मान्तिकाः स्पर्शा यमा झपञमान्तरे
शषसहाः स्युरूष्माणोऽन्तस्था यरलवाः स्मृताः ८

कखतः पफतः पूर्वः क्रमादर्द्धविसर्गकः
जिह्वामूलीयको ज्ञेय उपध्यमानीयसञ्ज्ञकः ९

विसर्गार्द्धविसर्गानुस्वारव्यङ्गं पराश्रयम्
एतत्परापरौ ह्रस्वौ ग्लौ दीर्घश्च गुरुस्तथा १०

इति व्यङ्गभेदाः

हकुविसर्जनीयानां स्यात्कण्ठ्यं यिश्चु तालुकम्
ऋटुर्षं स्लृतुला दन्तम्पूपध्मानीयमोष्ठजम्  ११

वो दन्तोष्ठं ञमस्यापि नासिकायमयुग्घुरः
ओदौतोरपि कण्ठोष्ठं त्वेदैतोः कण्ठतालुकम्  १२

जिह्वामूलीयमात्रस्य जिह्वामूलं हि चाष्टमम्
सद्यो बोधकरा शिक्षा मणिभूता प्रकाशिता  १३

करालो न च लम्बोष्ठो नाव्यक्तो नानुनासिकः
गद्गदो बद्धजिह्वश्च प्रयोगान्वक्तुमर्हति  १४

व्याघ्री दद्भिर्हरेत्पुत्रान्भीता पाताच्च पीडनात्
तद्वत्प्रयोजयेद्वर्णांस्तेन लोके महीयते  १५

इति वर्णोच्चारः

शिवा यान्निःसृतां शिक्षां प्रयतो यः पठेदिह
पुत्रकीर्तिधनायुष्मान्त्स्वर्गेऽतिसुखमश्नुते  १६

इति रामकृष्णविरचिता षोडशश्लोकी शिक्षा समाप्ता